आमोसधि विप्पोसधि खेलोसधि जल्लमोसधी चेव ।
संभिण्णसोतुज्जुमति सव्वोसधिमेवं बोधव्वा ॥६८॥७७५॥
चारण आसीविसं केवली य मणणाणिणो य पुव्वधरा ।
अरहंत चक्कवट्टी बलदेवा वासुदेवा य ॥६९॥७७६॥
संफरिसणमामोसो मुत्तपुरीसाण विप्पुसो विप्पो ।
अण्णे विदि त्ति विट्ठा भासन्ति य प त्ति पासवणं ॥७७७॥

**आमो०** गाहा । **चार०** गाहा । **संफ०** गाहा । आमर्षणमामर्षः संस्पर्शनमित्यर्थः । आमर्ष एवौषधिः आमर्षौषधिः । आमर्षौषधिं प्राप्त आमर्षौषधिप्राप्तः । अथवामर्षः औषधिर्यस्य सोऽयमामर्षौषधिः साधुः । एवमन्यत्रापि । विण्मूत्रावयवो विप्रुट् ॥७७५-७७७॥

एते अण्णे वि बहू जेसिं सव्वे य सुरभयोऽवयवा ।
रोगोवसमसमत्था ते होन्ति तदोसधिप्पत्ता ॥७७८॥
जो सुणति सव्वतो सुणति सव्वविसए व्व सव्वसोतेहिं ।
सुणइ बहुए व्व सद्दे भिण्णे संभिण्णसोतो सो ॥७७९॥

**एते** गाहा । **जो सु०** गाहा । यः किल सर्वतः श्रृणोति, स संभिन्नश्रोता । अथवा श्रोतांसीन्द्रियाणि, सम्भिन्नान्येकैकशः, सर्वविषयैरस्य परस्परतो वेत्ति, सभिन्नान् वा परस्परतो लक्षणतोऽभिधानतश्च बहूनपि शब्दाञ्छ्रृणोति संभिन्नश्रोता ॥७७८-७९॥

रिजु सामण्णं तम्मत्तगाहिणी रिजुमती मणोणाणं ।
पायं विसेसविमुहं घडमेत्तं चिन्तितं मुणति ॥७८०॥

**रिजु** गाहा । ऋज्वी मतिः ऋजुमति सामान्यग्राहिणीत्यर्थः । मनःपर्यायविशेषः प्रायो विशेषविमुखमेवोपलभते । नातिबहुविशेषविशिष्टमर्थमिति यावत्, यथा घटोऽनेनानुचिन्तित इति ॥७८०॥

विपुलं वत्थुविसेसणमाणं तग्गाहिणी मती विपुला ।
[५२-प्र०] चिंतितमणुसरति घडं पसंगतो पज्जयेसतेहिं ॥७८१॥

**विपु०** गाहा । विपुलमतिः बहुविशेषग्राहिणीत्यर्थः । मनःपर्यायविशेष एव । तमेव घटं देशाद्यनेकपर्यायविशिष्टं जानीत इति ॥७८१॥

---

१ °सोय उजु° को हे त । २ °सहि चेव बोधव्वो को हे । ३ °विसा हे । ४ °पुरि° जे । ५ विप्प° त । ६ °डि को हे त । ७ अण्णे य त को हे । ८ °पत्ता हे । ९ व को हे । १० मुणए को हे । ११ पज्जव को हे ।

अतिसयचरणसमत्था जंघाविज्जाहि चारणा मुणयो ।
जंघाहि जाति पढमो णीसं कातुं रविकरे वि ॥७८२॥

**अति०** गाहा । अतिशयचरणाच्चारणाः अतिशयगमनादित्यर्थः । ते च विद्या-जङ्घाचरणा द्विभेदाः ॥७८२॥

एगुप्पादेण गतो रुयगवरंमितो ततो पंडिणियत्तो[1] ।
[2]बितिएणं णन्दीस्सरमिधं ततो एति ततिएणं ॥७८३॥
पढमेण पंडगवणं [3]बितिउप्पातेण णंदणं एति ।
[4]ततिउप्पादेण ततो इध जंघाचारणो[5] एति ॥७८४॥
पढमेण माणुसोत्तरणगं स णन्दिस्सरं तु [6]बितिएणं ।
एति ततो ततिएणं कतचेतियवंदणो इधइं ॥७८५॥
पढमेण णंदणवणे [7]बितिउप्पादेण पंडगवणम्मि ।
एति इधं ततिएणं जो विज्जाचारणो होति ॥७८६॥
आसी दाढा तग्गतमहाविसासीविसा दुविधभेता ।
ते कम्मजातिभेतेणाणेगचतुव्विधविगप्पा ॥७८७॥

**एगु०** गाहा [४]। **आसी** गाहा। आस्यो दंष्ट्रास्तासु विषमेषामित्याशीविषा जातिनः कर्मतश्च । जातिनो वृश्चिकमण्डूकोरगमनुष्यजातयः । कर्मतस्तिर्यग्योनयो मनुष्या देवाश्चाऽऽसहस्रारात् ॥७८३-७८७॥

मणणाणिग्गहणेणं वेउलमती केवली चतुभेतो ।
सम्मत्तणाणदंसणचरणेहिं खयप्पसूतेहिं ॥७८८॥

**मण०** गाहा । इह मनोज्ञानिग्रहणा[त्] द्विलक्षणाद्विपुलमतिग्रहणं प्रत्येतव्यम्, पूर्वमृजुमतिग्रहणात् । सम्यक्त्वादिकवलचतुष्टयभेदाच्चतुर्विध केवली ॥७८८॥

ओधिण्णाणावसरे मणपज्जवकेवलाण किं गहणं ।
[५२-द्वि] लद्धिपसंगेण कतं गहणं [14]जध सेसलद्धीणं ॥७८९॥

**ओधि०** गाहा । अवधिज्ञानाधिकारे लब्धिसामान्यात् मनःपर्यायकेवलयोर्ग्रहणम्, शेषलब्धिवत् ॥७८९॥

१ °रम्मि त । २ पडि को हे त । ३ बीएण का हे त । ४ नन्दि° को हे त । ५ बीओ-प्पा° को हे त । ६ तइओप्पा को हे त । ७ °रणा त । °रणो होइ को हे । ८ °रं तु बीएणं त । रं बितियएण जे । ९ बीओप्पा° को हे । १० मेएण णेगहा च° को हे त । ११ °णाण° त । १२ बिउ° को हे । १३ ष्टये-इति प्रतौ । १४ °णं अं से° त ।

सोलस रायसहस्सा सव्वबलेणं तु संकलणिबद्धं ।
[1]अंच्छन्ति वासुदेवं अगडतडम्मी ठितं सन्तं ॥७०॥७९०॥
घेत्तूण संकलं सो वामगहत्थेण अंछमाणाणं ।
[3]भुंजेज्ज [4]विलिंपेज्ज व मेथुमधणं ते ण चाएन्ति ॥७१॥७९१॥
दो सोला बत्तीसा सव्वबलेणं तु संकलणिबद्धं ।
[6]अंछेंति चक्कवट्टिं अगडतडम्मी ठितं सन्तं ॥७२॥७९२॥
घेत्तूण संकलं सो वामगहत्थेण अंछमाणाणं ।
भुंजेज्ज[8] विलिंपेज्ज व चक्कधरं ते ण चाएन्ति ॥७३॥७९३॥
जं केसवस्स [9]तु बलं तं दुगुणं होति चक्कवट्टिस्स ।
तत्तो बला बलवता[10] अपरिमितबला जिणवरिन्दा ॥७४॥७९४॥
खीरमधुसप्पिसादोवमाणवयणा तदासवा होन्ति ।
कोट्ठयधण्णसुणिग्गलसुत्तत्था कोट्ठबुद्धीया ॥७९५॥
जो सुत्तपदेण बहुं सुतमणुधावति पताणुसारी सो ।
जो अत्थपतेणऽत्थं अणुसरति[12] स बीयबुद्धी तु ॥७९६॥
उदयं[13]खयखं[14]योवसमोवसमसमुत्था बहुप्पगाराओ ।
एवं परिणामवसा लद्धीओ होन्ति जीवाणं ॥७९७॥

**सोलस रायसहस्सा** गहाओ [८] । वीर्यान्तरायकर्मक्षयोपशमप्रकर्षाद् बलप्रकर्षो वासुदेवस्य, तत्प्रकर्षविशेषादेव चक्रवर्तिनः, समस्तान्तरायक्षयादर्हतामनन्तवीर्यतेति ॥७९०-९७॥

केयी भ[५३-प्र०]णन्ति वीसं लद्धीओ तण्ण युज्जते जम्हा ।
लद्धि त्ति जो[15]ऽतिसेसो अपरिमिता ते य जीवाणं ॥७९८॥
गणधरतेयाहारगपुलागवोमादिगमणलद्धीओ ।
एवं बहुगाओ[16] च्चिय सुव्वंति ण [17]संगिहीताओ ॥७९९॥
भव्वाभव्वानिविसेसणत्थमधवा तयं पि सवियारं ।
भव्वा वि अभव्वे[18] च्चिय जं चक्कधरादयो भणिता ॥८००॥

१ अच्छ° त । अछ को हे । २ °डम्मि को हे । ३ भुजि° को हे । ४ °ज्ज व लि° त । ५ महम° त । ६ अछ त । ७ °डम्मि को हे त । ८ °ज्ज व लुपे° त । ९ °स्स ब° हे । १० बलवया त । बलवगा को हे । ११ °माउ व° को हे त । १२ °रई को हे । १३ °मक्ख° को हे । १४ °क्खअ° हे । °खउव° को । १५ जो विसे° को हे त । १६ °ओ विय क्क हे । १७ संग° त । १८ अभव्व च्चिय जे त । अभव्वा विय को ।

**पोग्गलपरियट्टद्धं जण्णरदेवंतरं सुते भणितं ।**
**तो सो सव्वो कालो जमयं णेव्वाणभावीणं ॥८०१॥**

**केयी** गाहा [ ४ ] । कश्चिदाहु¹—विंशतिरेव लब्धयः । तच्च न । यतोऽतिशेषो लब्धिरित्युच्यते । न चेयन्त एव ते, गणधरादिलब्धिपरित्यागप्रसङ्गात् । उत ( अथ चेत् ) भव्याभव्यादिविवेचनार्थो यत्नस्तदन्यत्रापि समानम् अत्रापि च व्यभिचारः, यतश्चक्र-वर्तिलब्धिरभव्यस्यापीत्येवमुच्येत । न चामावभव्यस्य अर्द्धपुद्गलपरिवर्त्तान्तराभिधानात् । निर्वाणभाविनां चायं काल इति ॥७९८-८०१॥

**भणितोऽवधिणो विसयो तधावि तस्संगहं पुणो भणति ।**
**²संखेवरुयीण हितं अव्वामोहत्थमिट्ठं च ॥८०२॥**

**भणितो** गाहा । उक्तोऽवधिविषयस्तथापि येऽतिसंक्षेपरुचयस्तदनुग्रहार्थमव्या-मोहार्थं च भूयः स एव सङ्ग्रहतोऽभिधीयते ॥८०२॥

**दव्वाइं अंगुलावलिसंखेज्जातीतभागविसयाइं ।**
**पेच्छति चतुग्गुणाइं जहण्णतो मुत्तिमन्ताइं ॥८०३॥**

**दव्वाइं** गाहा । तं समासओ चउव्विहं पण्णत्तं तं जहा दव्वओ ४ । तत्र जघन्यतो रूपिद्रव्याणि, क्षेत्रतः कालतश्चाङ्गुलावलिकाऽसंख्येयभागा[भ्य]न्तरतः, भावतः प्रतिद्रव्यं चतुर्गुणानि ॥८०३॥

**उक्कोसं संखातीतलोगपोग्गलसमा णिबद्धाइं ।**
**पडिदव्वं संखातीतपज्जयाइं च सव्वाइं ॥८०४॥**

**उक्को॰** गाहा । उत्कृष्टतः सर्वरूपिद्रव्याणि, क्षेत्रतोऽसंख्येयलोकाश्रयाणि, कालतोऽसंख्येयोत्सर्पिण्यभ्यन्तरतः, भावतः प्रतिद्रव्यमसंख्येयपर्यायाणीति । उक्तमवधि-ज्ञानम् ॥८०४॥ छ ॥

**ओधिविभाए भणितं पि रुद्धिसामण्णतो मणोणाणं ।**
**विसयातिविभागत्थं भण्णति णाणकमायातं ॥८०५॥**

**ओधि॰** गाहा । मनःपर्यायज्ञानमिदानीम् । तच्चावधि[वि]भागे लब्धिसामान्यतो-ऽपदिष्टमपीह विषय-स्वाम्यादिविशेषोपदर्शनाय ज्ञानपञ्चकक्रमायातमुच्यते ॥८०५॥

१ °ति त्युच्यते–इति प्रतौ । २ संखेव° को हे त । ३ °गथिग्गं° जे । °गविग्ग° त । ४ °खाइय° त । ५ °नबन्धक°–इति प्रतौ ।

मणपज्जवणाणं पुण जणमणपरिचिंतितत्थपागडणं ।
[५३-द्वि०]माणुसखेत्तणिबद्धं गुणपच्चइयं चरित्तवतो ॥७५॥८०६॥
पुणसद्दो तु विसेसे रूविणिबंन्धातितुल्लभावे वि ।
इदमोहिण्णाणादो सामिविसेसादिणा भिण्णं ॥८०७॥

**मण०** गाहा । **पुण०** गाहा । पुनःशब्दो विशेषणार्थः । इह रूपिनिबन्धक्षायोपशमिकप्रत्यक्षादिसाम्ये सत्यपीदमवधिज्ञानात् स्वाम्यादिभेदाद्विशिष्टम् ॥८०६–७॥ यतः—

तं संजतस्स सव्वप्पमायरहितस्स विविधरिद्धिमतो ।
समयक्खेत्तंऽभंतरसण्णिमणोगतपरिण्णाणं ॥८०८॥

**तं०** गाहा । यथा सूत्रे "इड्ढिप्पत्तपमत्तसंजय" [ नन्दी सू०३० ] इत्यादि ॥८०८॥

मुणति मणोदव्वाइं णरलोगे सो मणिज्जमाणाइं ।
काले भूतभविस्से पलितासंखेज्जभागम्मि ॥८०९॥
दव्वमणोपज्जाए जाणति पासति य तग्गतेऽणंते ।
तेणावभासिते पुण जाणत्ति बज्झेऽणुमाणेणं ॥८१०॥

**मुणति** गाहा २ । "तं समासओ चउव्विहं पण्णत्तं तं जहा दव्वओ ४" [नन्दी सू०३२] इत्यादि सूत्रतोऽनुगन्तव्यम् । स च किल मनःपर्यायांस्तद्गतांश्चैव रूपादीन् साक्षाज्जानीते पश्यति च । बाह्यांस्तु तद्विषयभावापन्नाननुमानतः । कुतः? मनसो मूर्त्तालम्बनसद्भावात् छद्मस्थस्य चामूर्त्तादर्शनात्, अनन्तप्रदेशिकस्कन्धदर्शनापदेशाच्च ॥८०९–८१०॥

सो य ईराचक्खुदंसणेण पासति जधा सुतण्णाणी ।
जुत्तं सुते परोक्खे पच्चक्खे ण तु मणोणाणे ॥८११॥

**सो य** गाहा । स च किलाऽचक्षुर्दर्शनतः पश्यति श्रुतज्ञानिवत् । आह—श्रुतविषयस्य परोक्षत्वादचक्षुर्दर्शनालम्बनता युक्ता, न तु मनःपर्यायविषयस्य, प्रत्यक्षत्वात् ॥८११॥

जति जुज्जते परोक्खे पच्चक्खे णणु विसेसतो घडति ।
णाणं जति पच्चक्खं ण दंसणं तस्स को दोसो ?॥८१२॥

१ °सद्दे त । २ °बद्धा° त । ३ °णो भणियं त । ४ °त्तब्भि° को हे । ५ बज्झो त ।
६ य किर अच° को हे त ।

**जति** गाहा । यद्यचक्षुर्दर्शनस्य परोक्षो विषयोऽभ्युपगम्यते, प्रत्यक्षे सुतरामनुमन्तव्यस्तदनुग्राहकत्वाचक्षुर्दर्शनोपलम्यविषयवत् । उच्यते— ज्ञानं यदि प्रत्यक्षम्, न दर्शनं प्रत्यक्षमिह । अत्र को दोषः ? अन्यविषयत्वाद् अवधिज्ञानिनश्चक्षुर्दर्शनाऽचक्षुर्दर्शनवत् ॥८१२॥

**अण्णेऽवेधिदंसणतो वदंति ण य तस्स तं सुते भणितं ।**
**ण य मणपज्जवदंसणमण्णं वे चतुप्पगारातो ॥८१३॥**

**अण्णे** गाहा । अन्ये मन्यन्ते— अवधिदर्शनेनासौ पश्यतीति । न च तस्य सूत्रेऽवधिदर्शनमुक्तम् । न च मनःपर्यायदर्शनं नामाऽस्ति चक्षुर्दर्शनादिचतुष्टयातिरिक्तमिति ॥८१३॥

**अहवा मणपज्जवदंसणस्स मयमोहिदंसणं सण्णा ।**
**विब्भंगदंसणस्स व णणु भणियमियं सुआईतं ॥८१४॥**

**अहवा** गाहा । अथवाभिप्रायो मनःपर्यायदर्शनस्यैवावधिदर्शनमिति संज्ञा विभङ्गदर्शनस्येवेत्यतस्तेनासौ पश्यतीति । तच्च न यतोऽभिहितं सूत्रातीतमिदमिति ॥८१४॥

**जेण मणोणाणविओ दो तिण्णि व दंसणाइं भणिआइं ।**
**जइ ओहिदंसणं होज्ज होज्ज णिअमेण तो तिण्णि ॥८१५॥**

**जेण** गाहा । यस्मात् मनःपर्यायविदो भगवत्यामाशीविषोद्देशके [ श० ८ उ० २ ] द्वे त्रीणि वा दर्शनान्युक्तान्यतो गम्यते यो मनःपर्यायविदवधिमांस्तस्य त्रयम्, अन्यस्य द्वयम्, अन्यथा हि द्व(त्र)यमेवाभविष्यत् ॥८१५॥

**अण्णे तु मणोणाणी जाणइ पासइ अ जोऽवहिसमग्गो ।**
**[ ५४-प्र० ] इतरो तुं जाणति च्चिय संभवमेत्तं सुतेऽभिहितं ॥८१६॥**

**अण्णे** गाहा । अन्ये मन्यन्ते यो—मनःपर्यायविदवधिमानेव स जानीते पश्यति च, इतरस्तु जानीत एव । सम्भवमात्रं तु सूत्रेऽधिक्रियते पश्यतीति ॥८१६॥

**अण्णे जं सागारं तो तं णाणं ण दंसणं तम्मि ।**
**जम्हा पुण पच्चक्खं पेच्छति तो तेण तेंणाणी ॥८१७॥**

**'भण्णति पण्णवणाए' मणपज्जवणाणपासणा भणिता ।**
**तो एव पासते सो संदेहो हेतुणा केण ? ॥८१७॥१॥**

१ °धिदन्स° जे । २ च को हे । ३ °क्तावेति–इति प्रतौ । ४ °रो य को हे । ५ त णाणी जे । ६ स्वोपज्ञवृत्तौ अस्या गाथायाः प्रतीकं न दृश्यते । कोट्याचार्येण तु "उच्यते–'भण्णइ' इत्यादि कण्ठ्या" इति कृत्वा गृहीता । हेमचन्द्रमलधारिणा तु "प्रक्षेपगाथा चेयं लक्ष्यते, चिरन्तनटीकाद्वयेऽप्यगृहीतत्वात्, केषुचिद् भाष्यपुस्तकेषु अदर्शनाच्च । केवलं केषुचिद् भाष्यपुस्तकेषु दर्शनात्, किञ्चित्साभिप्रायत्वाच्च अस्माभिर्गृहीता" इत्युक्तम् । ७ प्रज्ञापना पद ३०। ८ तो को हे ।

**अण्णे०** गाहा । अन्ये त्वाहुः साकारोपयोगान्तःपातित्वान्न तद्दर्शनम्, दृश्यते चानेन प्रत्यक्षत्वादवधिवदिति । एतदपि—न दर्शनम्, दृश्यते चानेन— विरुद्धमुभयधर्म्मान्वयाभावाद्वा न किञ्चिदिति । अप्रमत्तसंयतस्वामित्वानुसारतः सत्पदनिरूपणादयोऽवधिवदनुगन्तव्या नानात्वं चेति । उक्तं मनःपर्यायज्ञानम् ॥८१७॥ इदानीं केवलज्ञानमुच्यते—

**अध सव्वदव्वपरिणामभावविण्णत्तिकारणमणंतं ।**
**सासतमप्पडिवाति एगविहं केवलं णाणं ॥७६॥८१८॥**

**मणपज्जवणाणातो केवलमुद्देससुद्धिलाभेहिं ।**
**पुव्वमणंतरमभिहितमधसद्दोऽयं तदत्थम्मि ॥८१९॥**

**अह** गाहा । **मण०** गाहा । इह सूत्रक्रमोद्देशतः शुद्धितो लाभतश्च मनःपर्यायादनन्तरं केवलमुक्तमतस्तदर्थोऽथशब्दोऽनुप्रयुज्यत इति ॥८१८–८१९॥

**सव्वदव्वाण पयोगवीससामीसया[3] जधाजोगं[4] ।**
**परिणामा पज्जाया जम्मविणासातयो सव्वे ॥८२०॥**

**सव्व०** गाहा । सर्वद्रव्याणि जीवाजीवाः तत्परिणामाः प्रयोगविस्रसोभयाख्या यथायोगमुत्पादादिपर्यायस्वभावाः ॥८२०॥

**तेसिं भावो सत्ता सलक्खणं वा विसेसतो तस्स ।**
**[5]णाणं विण्णत्ती [6]तीय कारणं केवलं णाणं ॥८२१॥**

**तेसिं** गाहा । तेषां सर्वद्रव्यपरिणामानां भावः सत्ताऽस्तित्वमित्यर्थः स्वलक्षणं चेत्यतस्तस्य विविधविशेषेण च ज्ञापनं विज्ञप्तिः, विज्ञानमेव वा विज्ञप्तिः, स्वार्थे कः प्रत्ययः परिच्छेद इत्यर्थः । तद्भेदोपचारानुवृत्त्या तस्याः कारणं हेतुः केवलम् ॥८२१॥

**किं बहुणा सव्वं सव्वतो सदा सव्वभावतो णेयं ।**
**सव्वावरणातीयं केवलमेगं पयासेति ॥८२२॥**

**किं बहु०** गाहा । सर्वद्रव्यक्षेत्रकालभावाः विज्ञायन्ते केवलेनेति ॥८२२॥

---

१ त्तः सं –इति प्रतौ । २ °वाई ए° का हे त । ३ मीससा को हे । ४ जोग्गं को हे त । ५ णाणी विण्णत्ती तीई को त । ६ °त्तीए का° हे को ।

**पज्जायेतो[1] अणंतं सासतमिद्दं[2] सतोवयोगातो ।**
**अव्वयतो[५४-द्वि०]ऽपडिवातिं[3] एक्कविधं[4] सव्वसुद्धीतो[5] ॥८२३॥**

**पज्जा०** गाहा । अनन्तपर्यायात्मकत्वादनन्तम्, शश्वद्भावाच्छाश्वतम्, सदोपयोगवदित्यर्थः । अव्ययत्वादप्रतिपाति, सदावस्थानादित्यर्थः । सर्वशुद्धेरेकविधम्, समस्तपटशुद्धिवत् ॥८२३॥

**केवलणाणेणऽत्थे णातुं जे तत्थ पण्णवणजोग्गे ।**
**ते भासति तित्थकरो वइजोग सुतं हवति सेसं ॥७७॥८२४॥**
**णातूण केवलेणं भासति ण सुतेण जं सुतातीतो ।**
**पण्णवणिज्जे भासति णाऽणभिलप्पे सुतातीते ॥८२५॥**

**केवल०** गाहा । **णातूण** गाहा । इह तीर्थकृत्केवली(ल)ज्ञानेनोपलभ्यार्थान् भाषते, न श्रुतेन, तस्य क्षायोपशमिकत्वात्तदभावाच्च केवलिनः । सर्वशुद्धौ च देशशुद्ध्यभावात्समस्तपटशुद्धिवत् । प्रज्ञापनीयानेव च भाषते नेतराननभिलाप्यत्वात् ॥८२४-२५॥

**तत्थ वि जोग्गे भासति णायोग्गे गाहयाणुअंत्तीय ।**
**भणिते व जम्मि सेसं सयमूहति भणति तम्मत्तं ॥८२६॥**

**तत्थ वि** गाहा । प्रज्ञापनीयत्वेऽपि सति न सर्वानेव भाषतेऽनन्तत्वात् । किं तर्हि ? योग्यानेव भाषते ग्रहीतृशक्त्यपेक्षया–यो हि यावतां योग्य इति । यत्र वाभिहिते शेषमनुक्तमप्यूहते तदस्य योग्यम्, यथा ऋषभसेनादीनामुत्पादादिपदत्रयेणैव शेषगतिः ॥८२६॥

**वइयोगो तण्ण सुतं खयोवसमियं सुतं जेंतो ण तओ ।**
**विण्णाणं से खइयं सद्दो पुण दव्वसुतमेत्तं ॥८२७॥**

**वइ०** गाहा । तत्पुनर्भाष्यमाणं वाग्योग एव[12] न तु श्रुतम्, श्रुतस्य क्षायोपशमिकत्वादित्युक्तं । वाग्योगस्तु नामप्रत्ययादौदयिकः । विज्ञानमप्यस्य क्षायिकत्वात् केवलम् । शब्दस्तु पुद्गलात्मकत्वाद् द्रव्यश्रुतमात्रमतो न भावश्रुतमिति ॥८२७॥

**सेसं छतुमत्थाणं[13] जं विण्णाणं सुताणुसारेण ।**
**तं भावसुतं भण्णति खयोवसमियोवयोगातो ॥८२८॥**

---

१ पज्जायातो जे । २ °मिदं च स° को । ३ °वाई को हे त । ४ एग° को हे । ५ सव्वबुद्धीए त । ६ °नन्तश्वस्तद्भा°–इति प्रतौ । ७ °द प्र° इति–प्रतौ । ८ °णुवित्तीए को हे त । ९ ग्रहीतृष्णकोतृणस्युपायो हि–इति प्रतौ । १० °दानामुत्पाददिप्राग् तनूर्येणै°–इति प्रतौ । ११ तओ न तओ हे । १२ एष उपश्रु°–इति प्रतौ । १३ °णं विन्नाणं जं को । °णं विन्नाणं सु° हे ।

**सेस** गाहा । 'सुतं हवति सेसं'[८२४] ति शेषमिति यैच्छब्दस्थानां श्रुतग्रन्थानुसारि विज्ञानं तद्भावश्रुतम्, तद्भावक्षायोपशमिकोपयोगात् ॥८२८॥

**भण्णंतं वा ण सुतं सेसं कालं सुतं मुंणेन्ताणं ।**
**तं चेय सुतं भण्णिति कारणकज्जोवयारेणं ॥८२९॥**

**भण्ण०** गाहा । 'सुतं हवति सेसं' [८२४]ति श्रुतं तद्भवति शेषं कालमिति वाक्यशेषः । न तु भण्यमानम्, शब्दमात्रत्वात् । श्रुतानन्तरं तु श्रोतृविज्ञानकारणत्वा-त्तच्छ्रुतम् ॥८२९॥

**अधवा वइयोग सुतं सेसं सेसं ति जं गुणभूतं ।**
**भावसुतकारणाते जमप्पधाणं ततो सेसं ॥८३०॥**

**अधवा** गाहा । अथवा वाग्योग[४] श्रुतं भँवति । किंविधं ? शेषम । शेषमिति गुणभूतमप्रधानमागृह्यते भावश्रुतकारणम् , न भावश्रुतमित्यर्थः ॥८३०॥

**वइओग सुतं तेसिं ति केइ तेसिन्ति भासमाणाणं ।**
**अधवा सुत[५५-प्र०]कारणतो वइयोगसुतं सुणेंताणं ॥८३१॥**

**वइ०** गाहा । केचित् पठन्ति 'वइजोगसुतं हवति तेसिं' तेषामिति वँक्तृ संबन्धात् । नन्वेकवचनमुक्तं 'ते भासति तित्थकरो'[८२४] त्ति । इह 'तेसिं' बहुवचना-द्वचनभेदः । उच्यते—न दोषो यथान्यत्र "अच्छंदा जे ण भुंजंति न से चाइ त्ति वुच्चइ ।" [दशवै० २. २] अथवा तेषामिति श्रोतृणां वाग्योग एव श्रुतं वाग्योगश्रुतं न भावश्रुत-मित्यर्थः । अथवा तान् भाषते तीर्थकृद्वाग्योगश्चार्थमस्य भवति । श्रुतं भवति तेषामिति श्रोतृणां भावश्रुतकारणत्वाच्छ्रुतमिति ।

सत्पदप्ररूपणादिषु—गतौ सिद्धमनुष्ययोः केवलम्, इन्द्रियेऽतीन्द्रियस्य, एवं त्रसकायाकाययोः, सयोगाऽयोगयोः, अवेदस्याऽकषायस्य, शुक्लेश्यालेश्ययोः, सम्य-ग्दृष्टेः, केवलज्ञानिनः, केवलदर्शिनः, संयत-नोसंयतयोः, साकारानाकारोपयोगयोः, आहारकानाहारकयोः, भाषकाभाषकयोः, परीत्त-नोपरीत्तयोः,पर्याप्त-नोपर्याप्तयोः, बादर-नोबादरयोः, नोसंज्ञिनः, भव्य-नोभव्ययोः, चरमाचरमयोः । द्रव्यप्रमाणम्— प्रपद्यमाना-नामुत्कृष्टतोऽष्टोत्तरशतम् । पूर्वकेवलिनोऽनन्ताः । क्षेत्रं जघन्यतो लोकस्यासंख्येयभागः, उत्कृष्टतो लोकः । स्पर्शनमप्येवमेव । कालतः साद्यमपर्यन्तं नास्यान्तरमस्ति[११] । भावः क्षायिकः । भागाल्पबहुत्वे पूर्ववत् ॥८३१॥

**केवलणाणं णन्दी मंगलमिति चेह परिसमत्ताइं ।**
**अधुणा स मंगलत्थो भँण्णइ पणतोऽणुयोगो त्ति ॥८३२॥**

---

१ यच्छब्दस्था°-इति प्रतौ । २ मुणे° त । ३ ते चेव त । त चेव को हे । ४ °गश्रु°-इति प्रतौ । ५ भनक्ति-इति प्रतौ । ६ वक्तृबन्धानत्वेक-इति प्रतौ । ७ °च्चामावश्यभ°-इति प्रतौ । ८ कायावयोः-इति प्रतौ । ९ सयोगयोः-प्रतौ । १० °ऽष्टशतां-इति प्रतौ । ११ °मस्ति नावभागा°-इति प्रतौ । १२ भणंति जे ।

**केवल०** गाहा । केवलज्ञानमिह समापितम् । तत्समाप्तौ च नन्दी । तत्परिसमाप्तौ च मङ्गलमिति ॥छ॥

इदानीं मङ्गलार्थोऽनुयोगः । मङ्गलेनार्थोऽस्येति मङ्गलार्थः ? अथवाऽर्थतेऽसावित्यर्थः गम्यते साध्यत इति यावद मङ्गलस्यार्थो मङ्गलार्थो [1]मङ्गलसाध्यः । स च कः ? प्रकृतोऽनुयोगः । प्रकृतोऽधिकृत इत्यर्थः ॥८३२॥

**सो मतिणाणातीणं कतरस्स सुतस्स जण्ण सेसाइं ।**
**होन्ति पराधीणाइं ण य परबोधे समत्थाइं ॥८३३॥**

**सो मति०** गाहा । सोऽनुयोगो मतिज्ञानादीनां कतमस्येति ? उच्यते ? श्रुतस्य, न शेषाणामपराधीनत्वादपरप्रबोधकत्वाच्च ॥८३३॥

**पाएण पराधीणं दीवो व्व परप्पबोधयं जं च ।**
**सुतणाणं तेण परप्पबोधणत्थं तदणुयोगो ॥८३४॥**

**पाए०** गाहा । श्रुतं तु प्रायेण यतः पराधीनं परप्रबोधकं च प्रदीपवत् । अनुयोगश्च पर[2]प्रबोधनायारभ्यते । अतः श्रुतस्यैवासाविति ॥८३४॥

**सोऽधिगतो च्चिय आव[3]सयस्स कतरस्स किं[4]त्थं चिन्ताए ।**
**तं चिय सुतं ति साहति सुताणुयोगाभिधाणेणं ॥८३५॥**

**सो०** गाहा । आह—[5]प्रबोधकस्यास्यानुयोगं वक्ष्यामीत्युक्त एवासौ, पुनः 'कतमस्य ज्ञानस्य' इति किमनया ? उच्यते— इह श्रुतज्ञानस्यानुयोग इत्यभिधानात्तदेवावश्यकं श्रुतविशेष इत्युक्तं भवति ॥८३५॥

**अ[6]णुयोजणमणुयोगो सुतस्स णियएण जमभिधेयेणं ।**
**वावारो वा जोगो [7]जोऽणुरूवोऽणुकूलो वा ॥८३६॥**

**अणु०** गाहा । आह—अनुयोग इति कः शब्दार्थः ? उच्यते । श्रुतस्य स्वेनार्थेनानुयोजनमनुयोगः । अथवा सूत्रस्य स्वाभिधेयव्यापारो योगः, अनुरूपोऽनुकूलो [8]योगोऽनुयोगः ॥८३६॥

**अधवा जमत्थतो थोवपच्छभावेहि सुतमणुं तस्स ।**
**अभिधेये वावारो जोगो तेणं व संबन्धो ॥८३७॥**

---

१ °र्थो मङ्गलार्थः । स च–इति प्रतौ । २ °प्रयोधनावार°–इति प्रतौ । ३ आवस्सय° को हे त । ४ किं व त । ५ °ह तु बोध°–इति प्रतौ । ६ अणुवयण° हे । ७ जो अणु° को । ८ °लोपयो°–इति प्रतौ ।

**अथ**० गाहा । अथ चार्थतः पश्चादभिधाना[त्] स्तोकत्वाच्च सूत्रमनु तस्याभिधेयेन योजनमनुयोगः, अणुनो वा योगोऽणुयोगोऽभिधेयव्यापार इत्यर्थः ॥८३७॥

[1]आवासयस्स जति सो तत्थंगादीणमह पुच्छाओ ।
तं होति सुतक्खंधो अज्झयणाइं च ण तु सेसा ॥८३८॥

**आवा**० गाहा । आह—स यद्यावश्यकस्यानुयोगस्तच्च श्रुतविशेषोऽतस्तत "किमंगमंगाइं सुयक्खन्धो सुयखंधा अज्झयणमज्झयणाणि उद्देसो उद्देसा" [अनु० सू० ६] इति? उच्यते— श्रुतस्कन्धोऽध्ययनानि च, न शेषः ॥८३८॥

णणु णंदीवक्खाणे भणितमणंगं इधं[2]कतो संका ।
भण्णति [५५-द्वि०] अकते संका तस्साणियमं च दाएति॥ ८३९॥

**णणु** गाहा । आह— ननु नन्दीव्याख्यानेऽङ्गानङ्गादिभेदेऽभिहितमनङ्गमावश्यकम् । इह का पुनराशङ्का? उच्यते । अङ्गानङ्गयोरनाशङ्काभिधानात् श्रुतस्कन्धादिष्वाशङ्काभिधानात । अङ्गानङ्गयोरपि वा शङ्का, नन्दीव्याख्यानमकृत्वा । अत एव च तद्व्याख्यानस्य शास्त्रादावनियमो निदर्श्यते ॥८३९॥

णाणाभिधाणमेत्तं मंगलमिट्ठं णतीयँ वक्खाणं ।
इधमत्थाणे जुज्जति जं सा वीसुं सुतक्खंधो ॥८४०॥

**णाणा**० गाहा । आह—ननु मङ्गलार्थमादौ नन्द्यपदिश्यते कथमनियमः? उच्यते— तत्र ज्ञानाभिधानमात्रमेव मङ्गलार्थमादौ नन्द्यपदिश्यते । कथमनियम? उच्यते—तत्र ज्ञानाभिधानमात्रमेव मङ्गलमिष्टम्, नावश्यं व्याख्यानमपि, दध्यादिमङ्गलोपहारवत् । अस्थानं चेदं नन्दीव्याख्यानस्य । न ह्यावश्यकव्याख्यारम्भे शास्त्रान्तरव्याख्यारम्भो युक्तः, पृथक् च श्रुतस्कन्धो नन्दीति ॥८४०॥

इध साणुग्गहमुदितं ण तु णियमोऽयमधवाऽववातोऽयं ।
[3]दाइज्जति कधणाए कताइ पुरिसादवेक्खाए ॥८४१॥

**इध** गाहा । आह—यदीदँमस्थानम्, इह नन्दीव्याख्यानं किमुक्तम्? उच्यते- शिष्यानुग्रहमास्थायोक्तम्, न त्वयं नियमः । अथवाऽपवादोपदर्शनायोक्तमिह, कदाचित पुरुषाद्यपेक्षयोत्क्रमेणापि, अन्यारम्भेऽपि वान्यदव्याख्यायत इति ॥८४१॥

१ आवस्सय° को हे त । २ गाईण अट्ठ को हे । ३ इह त । ४ तीए को हे ।
५ °मङ्गाणं को हे । ६ दोहि त । ७ यदीन्द्रम°–इति प्रतौ ।

**[1]आवासयसुतखंधो णामं सत्थस्स तस्स जे भेता ।**
**ताइं अज्झयणाइं णासो आवासयादीणं ॥८४२॥**
**कज्जो पिधप्पिधाणं जधत्थमजधत्थमत्थसुण्णं ति ।**
**णामे चे[2]अं पैंडिच्छा गज्झं जति होहिति जधत्थं ॥८४३॥**

**आवा०** गाहा। **कज्जो** गाहा । शास्त्रस्याभिधानम्—आवश्यकश्रुतस्कन्धः । तद्भेदाश्चाध्ययनानि । तस्मादावश्यकं निक्षेप्यं श्रुतं स्कन्धश्चेति पृथक् पृथगेषां न्यासः कार्यः। कस्मात् ? किमिदं शास्त्राभिधानं यथार्थं प्रदीपवत् उताऽयथार्थं पलाशवत्, डित्थादिवदर्थशून्यमिति ? यथार्थं च शास्त्राभिधानमिष्यते, तत्रैव समुदायार्थपरिसमाप्तेः । अतोऽभिधानमेव तावत् परीक्ष्यते, ग्राह्यमेतद्यदि यथार्थमिति ॥८४२–८४३॥

**णामातीओ णासो चतुव्विधो मंगलस्स व स णेयो ।**
**विण्णेयो य विसेसो सुत्तगतो किंचि वोच्छामि ॥८४४॥**

**णामा०** गाहा । तत्रावश्यकन्यासो नामादिचतुर्विधः, मङ्गलवत् । विशेषश्चासौ सौत्रो पन्थानुयोगद्वारे। किञ्चित्तु वक्ष्यामः। ॥८४४॥

**आगमतो दव्वावासयं तमावासयं पदं जस्स ।**
**सिक्खितमिच्चाति तयं तदणुवयुत्तो णिगदमाणो ॥८४५॥**

**आग०** गाहा । "से किं तं आगमओ दव्वावस्सयं २ जस्स णं आवस्सए त्ति पयं सिक्खियं"[अनु० सू० १३] इत्यादि सर्वमुच्चारणीयं तदनुपयुक्तोऽध्येता द्रव्यावश्यकम्, द्रव्यमङ्गलवत् ॥८४५॥

**सिक्खितमंतं णीतं हितयम्मि ठितं जितं दुतं एति ।**
**संखितवण्णादि मिदं परिजितमेतुक्कमेणं पि ॥८४६॥**

**सिक्खित०** गाहा । 'सिक्खितं' अन्तं नीतमित्यर्थः स्थितं हृदि व्यवस्थितमप्रच्युतमित्यर्थः, जितं द्रुतमागच्छति, वर्णादिभिः परिसंख्यातं मितम्, सर्वतो जितं परिजितं [7]एतदुत्क्रमेणाप्यागच्छति ॥८४६॥

**जध सिक्खितं सणामं तध तं पि तधा ठितादि णामसमं ।**
**गुरुभणितघोससरिसं गहितमुदत्तादयो ते य ॥८४७॥**

१ **कोहेत**प्रतीषु प्राय: 'आवासय' स्थाने 'आवस्सय' इति पाठ । २ चेव **को हे त** । ३ परि° **को हे त** । ४ न्यायः-इतिप्रतौ । ५ 'सञ्जाश्चा'-इति प्रतौ । ६ वुच्छा° **को हे** । ७ पतत् **क**-इति प्रतौ ।

**जध** गाहा । स्वनाम्ना समं नामसमम्, यथा हि स्वनाम शिक्षितं स्थितं जितं मितं परिजितमेवं तदपीति । वाचनाचार्याभिहितघोषैः—उदात्तादिभिः समं घोषसमम् ॥८४७॥

**ण वि हीणक्खरमधियक्खरं वे वोच्च[५६–प्र०]त्थरयणमाल व्व ।**
**वाइद्धक्खरंमधवा वच्चासितवण्णविण्णासं ॥८४८॥**

**ण वि** गाहा । 'हीनाक्षरम्' अक्षरन्यूनम्, 'अत्यक्षरम्' अधिकाक्षरं तद्विपरीतं हीनाक्षरमत्यक्षरं च, आभीरीप्रोतरत्नावलीवद्विपर्यस्तवर्णविन्यासमित्यर्थः ॥८४८॥

**ण खलितमुवलहलं पित्र णं मिलितमसरूवधण्णमेलो व्व ।**
**वोच्चत्थगंन्थमधवा णं मिलितपदवक्कविच्छेदं ॥८४९॥**

**ण** गाहा । न च स्खलितमुपलाकुलभूमिलाङ्गलवत् । न च मिलितमसमानधान्यसंकरवत् । विपर्यस्तं पदवाक्यग्रन्थम् । अथवा न संसक्तपदवाक्यविच्छेदमिति । इह च व्याविद्धविपर्यस्तपदवाक्यग्रन्थयोरयं विशेषः—वर्णत एव व्याविद्धं पदवाक्यग्रन्थतो विपर्यस्तमिति । केचित्तु व्याविद्धं वर्णपदवाक्यग्रन्थतो मन्यन्ते, सांसक्तपदवाक्यविच्छेदं विपर्यस्तमिति ॥८४९॥

**ण य विविधसत्थपल्लवविमिस्समत्थाण छिण्णगधितं वा ।**
**विचामेलित कोलियपायसमिव भेरिकंथ व्व ॥८५०॥**

**ण य** गाहा । न च व्यत्याम्रेडितमनेकशास्त्रग्रन्थसंकरादस्थानछिन्नग्रन्थनाद्वा पायसभेरीवत्, प्राप्तराज्यस्य रक्षमाणामित्यादिवद्वा ॥८५०॥

**मत्तातिणियतमाणं पडिपुण्णं छंदसाऽधवऽत्थेणं ।**
**णाकंखातिसदोसं पुण्णमुदत्तादिघोसेहि ॥८५१॥**

**मत्ता०** गाहा । प्रतिपूर्णं ग्रन्थतोऽर्थतश्च । तत्र ग्रन्थतो मात्रादिभिर्यत् प्रतिनियतमानं छन्दसा वा । अर्थतो न साकाङ्क्षमव्यापकमस्वतन्त्रं वा । प्रतिपूर्णघोषमुदात्तादिभिरविकलम्, घोषसममिति शिक्षितप्रतिपूर्णघोषमित्युच्चारणायामयं विशेषः ॥८५१॥

**कंठोट्ठविप्पमुक्कं णोवत्तं बालमूअभणियं व ।**
**गुरुवायणोवयातं ण चोरितं पोत्थंयातो वा ॥८५२॥**

---

१ च को हे । २ °रमेय वच्चा° को हे त । ३ °मुवालि° त । ४ °पिव अमि° त को हे । ५ °गंत्थ° जे । गध हे त । ६ वा अमि° को हे त । ७ °स्तत्तर°—इति प्रतौ । ८ °मट्ठाण° को हे । ९ णाव्वत्त को हे । १० पुत्थि° त । पोत्थि° को ।

**कंठो०** गाहा । कण्ठोष्ठविप्रमुक्तमिति स्पष्टमाह, नाव्यक्तं बालमूकभाषितवत्, गुरुनिर्वाचितं न चौर्यात् कर्णाघाटितं स्वतन्त्रेण वाधीतं पुस्तकात् ॥८५२॥

**आगमतोऽणुवयुत्तो वत्ता दव्वं ति सिद्धमावासं ।**
**किं सिक्खितातिसुतगुणविसेसणे फलमिहब्भहितं ॥८५३॥**

**आग०** गाहा । आगमतोऽनुपयुक्तो वक्ता द्रव्यावश्यकमित्येतावता सिद्धे शिक्षितादिश्रुतगुणविशेषणैः कोऽर्थः ? ॥८५३॥

**जध सव्वदोसरहितं पि णिगततो सुत्तमणुवयुत्तस्स ।**
**दव्वसुतं दव्वावासयं च तध सव्वकिरियाओ ॥८५४॥**

**जध** गाहा । यथेह सर्वदोषरहितमपि निगदतः सूत्रमनुपयुक्तस्य द्रव्यश्रुतं द्रव्यावश्यकं च, तथेर्यादिसर्वक्रियाविशेषाः कर्तुरन्तःकरणशून्यत्वाद् द्रव्यम् । अतश्च तत्फलविकला इति ॥८५४॥

**उवयुत्तस्स तु खलितातियं पि सुद्धस्स भावतो सुत्तं ।**
**सोहति तध किरियाओ सव्वाओ णिज्जरफलाओ ॥८५५॥**

**उव०** गाहा । उपयुक्तस्य तु स्खलितादिदोषदुष्टमपि शुद्धात्मनो निगदतः भावश्रुतमेव, तथोपयुक्तस्य शुद्धात्मनः सर्वक्रियाविशेषाः कर्मविगरणायेत्याह ॥८५५॥

**अधिए [५६-द्वि०] कुणालकविणो हीणे विज्जाधरादिदिट्ठंता ।**
**बालातुरादिभोयणभेसज्जविवज्जओ[3] उभये ॥८५६॥**
**चन्दगुत्तप्पपोत्तो[4] उ, बिन्दुसारस्स णत्तुओ ।**
**असोगसिरिणो पुत्तो, अंधो जायति कोकणिं ॥८५७॥**
**जो जधा वट्टते कालो, तं तधा सेव वाणरा ।**
**मा वंजुलपरिब्भट्ठो, वाणरा पडणं सँर ॥८५८॥**
**विज्जाधरो[8] रायगिहे उप्पडंपडणं च हीणदोमेणं ।**
**कधणो सरणागमणं पदाणुसारिस्स दाणं च ॥८५९॥**
**तित्तंकडुभेसयाइं मा णं पील्लेज्ज ऊणएं देति ।**
**पउणति ण तेहि अधिएहि मरति बालो तथाहारे[12] ॥८६०॥**
**अत्थस्स विसंवातो सुतभेतातो ततो चरणभेदो ।**
**तत्तो मोक्खाभावो मोक्खाभावेऽफला दिक्खा ॥८६१॥**

१ °मिहातासि°- इति प्रतौ । २ सोहति त । ३ °ज्जआ को हे । ४ °पुत्तो को हे । ५ कागिणिं त । कागणिं हे । ६ परिभ° हे । ७ सरा जे । ८ हर को हे त । ९ उप्पयप° को हे । १० चित्त को । ११ ऊणय त । १२ °हारो त । १३ °तोपयमे° को ।

**अधिए** गाहा ६ । हीनाधिकादावर्थभेदोऽर्थभेदात् क्रियाभेदस्ततो मोक्षाभावः, ततो दीक्षाविफलेत्यपायोपदर्शनम् ॥८५६–८६१॥

**णोआगमतो जाणयभव्वसरीरातिरित्तमावासं ।**
**लोइयलोगुत्तरीयं ¹कुप्पवयणजं जधा सुत्ते² ॥८६२॥**

**णोआगम०** गाहा । णोआगमतो द्रव्यावश्यकं ज्ञशरीरादि त्रिविधम्, लौकिकादि च यथानुयोगद्वारे [ सू० १८ ] ॥८६२॥

**लोगुत्तरे अभिक्खणमासेवालोयओ उदाहरणं ।**
**स रतणदाहगवाणियणातेण [५७-प्र०]जतोहुवालद्धो ॥८६३॥**
**आगमतो भावावासयं तदत्थोवयोगपरिणामो ।**
**णोआगमतो भावो³ परिणामो णाणकिरियासु ॥८६४॥**

**लोगु०** गाहा । **आग०** गाहा । भावावश्यकमागमतो नोआगमतश्च । तत्रागमतो भावावश्यकं आवश्यकपदार्थोपयोगपरिणामः । नोआगमतस्तु ज्ञानक्रियोभयपरिणामो मिश्रवचनत्वान्नोशब्दस्य ॥८६३–८६४॥

**लोइयलोगुत्तरियं कुप्पवयणजं च तं समासेणं ।**
**लोगुत्तरं पसत्थं सत्थे तेणाधिकारोऽयं ॥८६५॥**

**लोइय०** गाहा । तत् त्रिविधं लौकिकादिसूत्रोपदिष्टम् । तत्र शास्त्रे लोकोत्तरमधिक्रियते ॥८६५॥

**तस्साभिण्णत्थाइं सुपसत्थाइं जधत्थणियताइं ।**
**अव्वामोहादिणिमित्तमाह पज्जायणामाइं ॥८६६॥**
**आवस्सयं अवस्सकरणिज्जं धुव णिग्गहो विसोही य ।**
**अज्झयणछक्कवग्गो णायो आराधणा मग्गो ॥८६७॥**
**समणेण सावएण ⁸य अवस्सकातव्वयं हवति जम्हा ।**
**अन्तो अहोणिसस्स तु तम्हा आवस्सयं णाम ॥८६८॥**
**जमवस्सं करणिज्जं तेणावासयमिदं गुणाणं वा ।**
**आवस्सयमाधारो आ मज्जाताभिविधिवायी ॥८६९॥**

---

१ कुप्पावयण के हे । २ सुत त । ३ भावे को हे । ४ आण किं° को । ५ कुप्पावयणं को हे त । ६ °स्सं त को । ७ स जे । ८ °णिसि° को हे त । ९ जदवस्सं कायव्वं को हे त । १० तेणावस्सय° को हे त । ११ आवासय° को हे ।

**आवस्सं वा जीवं [1]करेइ जं णाणदंसणगुणाणं ।**
**सैण्णेज्झभावणाच्छादणेहि वा वासयं गुणतो ॥८७०॥**

**तस्सा०** गाहाओ [5] । उक्तमावश्यकम् । अस्येदानीमव्यामोहादिहेतोः पर्याय-नामान्युपदिश्यन्ते । [3]तत्रावश्यकरणादावश्यकम्, अपाश्रयो वायं गुणानामाङश्च मर्यादाभिविधिवचनत्वादपाश्रयम्, प्राकृताभिधानाल्लिङ्गैव्यत्यययादावसयं ति । अथवा गुणानामावश्यकमात्मानं करोतीत्यावश्यकम्, यथान्तं करोतीत्यन्तक । अथवा वसन्नि(नि)-वास इति गुणशून्यमात्मानमावासयन्तीति गुणैरित्यावासकं गुणसान्निध्यमात्मनः करोतीत्यर्थः । अथवा गुणैरावासकमनुरञ्जकमात्मनो वस्त्रधूपादिवत् गुणभावनामात्मनः करोतीत्यर्थः ।[4] अथवा वस आच्छादन इति गुणैरात्मानं आवासयति आच्छादयतीत्यावासकम् । गुणैराच्छादयति संवृणोतीत्यर्थः ॥८६६–८७०॥

**एवं चिय सेसाइं विदुसा सुतलक्खणाणुसारेणं ।**
**[५७-द्वि०]कमसो वत्तव्वाइं [5]तधा सुतक्खंधणामाइं ॥८७१॥**

**एवं** गाहा । एवं अवश्यकरणीयादीन्यपि सम्भवतोऽभिधेयानि बुद्धया, तथेह वक्ष्यमाणश्रुताभिधानानि श्रुतसूत्रग्रन्थादीनि [८८९], स्कन्धाभिधानानि च गणकायनिकायादीनीति [८९५] । उक्तमावश्यकम् ॥८७१॥ श्रुतमिदानीम् । तच्चतुर्विधम्, मङ्गलवत् ।

**आगमतो दव्वसुतं वत्ता सुत्तोवयोगणिरवेक्खो ।**
**णोआगमतो जाणयभव्वसरीरातिरित्तमिदं ॥८७२॥**

**आगम०** गाहा । आगमतो द्रव्यश्रुतस्याध्येताऽनुपयुक्त नोआगमतस्तु ज्ञशरीरादित्रिविधः ॥८७२॥

**पत्तादिगतं सुत्तं सुत्तं च जमंडजाति पंचविधं ।**
**आगमतो भावसुतं सुतोवयुत्तो ततोऽणण्णो ॥८७३॥**

**पत्तादि०** गाहा । तत्र ज्ञभव्यशरीरश्रुतं भव्यशरीरद्रव्यमङ्गलवत् । तदतिरिक्तं तु पत्रादिन्यस्तम्, अथवाऽण्डजादि सूत्राभिधानसामान्यात् । आगमतो भावश्रुतं तदुपयुक्तः, तदुपयोगाऽनन्यत्वात् ॥८७३॥

**णोआगमतो भावे लोइयलोगुत्तरं पुराभिहितं ।**
**सम्मत्तपरिग्गहितं सम्मसुतं मिच्छमितरं ति ॥८७४॥**

**णोआगम०** गाहा । नोआगमतो भावश्रुतं लौकिकं लोकोत्तरं च सम्य-

---

१ करइ हे । २ सण्णिज्जभावणत्थाने त । संनिउज्झभावणच्छा° को हे । ३ °न्ते । २ तत्रा°–इति प्रतौ । ४ °ज्ञप्रत्य°–इति प्रतौ । ५ °र्थः । २ अथ°–इति प्रतौ । ६ अहा त ।

ग्मिथ्यादर्शनपरिग्रहविशेषात् सम्यग्मिथ्या च पूर्ववत् ॥८७४॥

आगमतो भावसुतं जुत्तं णोआगमे कधं होति ।
जति णागमो ण सुत्तं अध सुत्तमणागमो किध णु ॥८७५॥

**आगम०** गाहा । आह आगमतो भावश्रुतं युक्तम्, अनागमतो विरोधात् । कथम् ? यद्यनागमो न [श्रुतम् । अथ] श्रुतमनागमो न स्यात् । श्रुतमनागमश्चेति विरुद्धम्, अचेतनात्मवत् ॥८७५॥

उवयोगो जम्मत्ते तं तं जति वाऽऽगमोऽवसेसं तु ।
णोआगमो[2] त्ति एवं किमणुवयुत्तस्स[3] दव्वसुतं ॥८७६॥

**उवयो०** गाहा । अथ मतिः– यावति यावत्युपयोगस्तत्तदागमश्रुतमन्यद नोआगमश्रुतम् । एवं यदपदिश्यतेऽनुपयुक्तस्य द्रव्यश्रुतमिति, तदसत् ॥८७६॥

अविसुद्धणयमतेण व जति तं[4] लद्धिसुतमणुवयुत्ते वि ।
भावसुतं चिय पढतो किमणुवयुत्तस्स दव्वसुतं ॥८७७॥

**अविसु०** गाहा । तथाऽविशुद्धनयमतालम्बनाल्लब्धिमतोऽनुपयुक्तस्यापि तद्भावश्रुतमेवाङ्गीक्रियते । ततोऽधीयानस्यानुपयुक्तस्य किमिति द्रव्यश्रुतमुच्यते ? ॥८७७॥

आगम सुतोवयोगो सुद्धो [5]च्चिय ण चरणातिसम्मीस्सो[6] ।
मीसे वि वा विवक्खा[7] सुतस्स चरणातिभिण्णस्स ॥८७८॥

**आगम** गाहा । उच्यते–यः शुद्ध एव श्रुतोपयोगो न चरणादिमिश्रः, असावागमतो भावश्रुतम् । अथवा मिश्रेपि श्रुतमेव हि भिन्नं विपक्षा(विवक्षित)त्वान्न चरणादीनि ॥८७८॥

[५८-प्र०]चरणातिसमेतम्मि तु उवओगो जो सुते[8] तओ समए ।
णोआगमो त्ति भणति णोसद्दो [9]मीसभावम्मि ॥८७९॥

**चरणा०** गाहा । चरणादिविमिश्रस्तु श्रुतोपयोगो यः स नोआगमतो भावश्रुतमुच्यते, मिश्रवचनत्वान्नोशब्दस्य ॥८७९॥

सव्वणिसेधे दोसो सव्वसुतमणागमो पसज्जेज्जा[10] ।
होज्जा वाऽणागमतो सुतवज्जमणागमसुतं तु ॥८८०॥

---

१ जइ को । २ °गमु त । ३ °त्तम्मिद° को हे त । ४ जइ तं णवि ल° त । जइ ल° को हे । ५ चिय को हे । ६ सम्मिस्सो को हे त । ७ °क्खो त । ८ सुते च तओ त । सुए न तओ हे । ९ मिस्स° त । १० °ज्ज जे ।

**सव्वणि०** गाहा । निषेधवचनत्वे पुनर्नोशब्दस्य सर्वनिषेधो देशनिषेधो वा गम्यते । तत्र सर्वनिषेधे तावन्नोआगमतो भावश्रुतमिति सर्वश्रुतस्यानागमत्वप्रसङ्गः स्यात्, अश्रुतस्य वा मत्यादेः श्रुतत्वप्रसङ्गः ॥८८०॥

**देसणिसेधे सयलं णोआगमतो सुतं ण पावेज्ज ।**
**भिण्णं पि व तं देसो चरणादीणं पसज्जेज्जो ॥८८१॥**

**देसणि०** गाहा । देशनिषेधे समस्तस्य श्रुतस्य नोआगमत्वं न स्यात्, तदेकदेशस्यैव स्यात् । भिन्नमपि वा तच्चरणादिभ्यश्चरणादिदेश एव स्यात्, ततश्च संकरैकत्वादिप्रसङ्गः स्यात् ॥८८१॥

**होज्ज व णोआगमतो सुतोवयुत्तो वि जं स देसम्मि ।**
**उवयुज्जति ण तु सव्वे तेणायं मीसभावम्मि ॥८८२॥**

**होज्ज** गाहा । अथवागमतः श्रुतोपयुक्तोऽपि नोआगमश्रुतमेव स्यात् यतः स श्रुतैकदेश एवोपयुज्यते न सर्वत्र, सर्वत्र सर्वपदार्थिकसमयोपयोगाऽभावात् । तस्मान्मिश्रवचन एवायं नोशब्द इति ॥८८२॥

**आह णणु मीसभावे णाभिहितो अभिहितो य णोसद्दो ।**
**देसे तदण्णभावे दव्वे किरियायं भावे य ॥८८३॥**

**आह** गाहा । आह—मिश्रभावे प्रतिषेधवचनो [नो]क्तो नोशब्दः । किं तर्हि ? देशप्रनिषेधादावुक्तो विवक्षितनोशब्दः देशे नोघटो घटैकदेशः । अन्यथा देशस्याघटत्वे तद्वत् सर्वदेशाघटत्वप्रसङ्गस्तद्वत् पटादीनामपीति शून्यतासक्तिः, एकदेशघटत्वे घटबहुत्वप्रसङ्ग । ततश्च संव्यवहाराभावः । अन्यवचनत्वे नोघटः पटादिस्तथा हि व्यपदेशसंव्यवहारदर्शनात् । घटैकदेशवचनादितरे च द्रव्ये । क्रियानिषेधवचनो नो पचति नो पक्तव्यमित्यादि । भावनिषेधवचनो नोशब्दः नो स्थीयत इत्यादि ॥८८३॥

**सच्चमयं देसातिसु तधवत्थवसेण सद्दविणियोगो ।**
**अमितत्था [3]य णिवाता जुज्जति तो मीसभावे [4]वि ॥८८४॥**

**सच्च०** गाहा । सत्यमयं देशप्रतिषेधादिवचनो नोशब्दः, तथाप्यर्थवशाच्छब्दविनियोग इत्यपरिमितार्थत्वाच्च निपातानां मिश्रवचनोऽपि युज्यत इति ॥८८४॥

१ °ज्ज जे । २ °याए कोहे । °याइ त । ३ व त । ४ भावम्मि त ।

[५८–द्वि०]अविसेसितसम्मीसोवयोगदेसो त्ति वा सुतं कातुं ।
णोआगमभावसुते णोसद्दो होज्ज देसे वि ॥८८५॥

**अवि०** गाहा । अविशेषितज्ञानदर्शनक्रियोपयोगैकदेशत्वाच्छ्रुतस्य नोआगमत इति नोशब्दो देशवचनोऽपि स्यात् ॥८८५॥

णोआगमतो केयि[1] सद्दसहायमुवयोगमिच्छन्ति ।
णणु सुतरमागमत्तं हि दव्वभावागमे जुत्तं ॥८८६॥

**णोआगम०** गाहा । नोआगम इति केचिच्छब्दमुपयोगं चेच्छन्ति, न तूपयोगमात्रमिति । अत्र च ननु सुतरामागम इति युक्तं द्रव्यभावागम., तद्भावात नोआगमत इत्ययुक्तम् ॥८८६॥

अध णागमो त्ति सद्दो णोआगमता य तदधियत्तणतो ।
आगमतो दव्वसुतं किध सद्दो णागमो जति सो[3] ॥८८७॥

**अध०** गाहा । अथ मतिः--शब्दो नागमः, किन्तूपयोग एवागमस्तस्य शब्दाधिकत्वान्नोआगमतेति । एवं च द्रव्यश्रुतमागमतः शब्दः कथं स्यात् यद्यनागमोऽसाविति ॥८८७॥

अण्णे णोआगमतो सामित्ताऽणासितं सुतं बेन्ति ।
जति ण सुतमणुवयोगे णणु सुतरमणासितं णत्थि ॥८८८॥

**अण्णे** गाहा । अन्ये सूरयोऽमुष्यायमिति स्वामित्वाश्रितमुपयोगमागमतो भावश्रुतमाचक्षते, स्वामित्वानाश्रितं तु श्रुतं नोआगमत इति । तत्र [4]यदि न भावश्रुतमनुपयोगेऽधीयानस्यापि विशिष्टस्य स्वामिनः, ननु सुतरामनाश्रितं न भावश्रुतम्, असत्त्वात् । क्व तदनाश्रितं भवेदन्यत्र स्वामिनः? तस्मान्न किञ्चिदेतदिति ॥८८८॥

सुतसुत्तगंथसिद्धंतसासणे आणवयणउवदेसे[6] ।
पण्णवणआगमे वि य एगट्ठा पज्जवा[7] सुत्ते ॥८८९॥

**सुय०** गाहा । उक्तं श्रुतम् ॥८८९॥ इदानीं स्कन्धः । स चतुर्विधो मङ्गलवत । विशेषं वक्ष्यामः--

खन्धपदेऽणुवयुत्तो वत्तागमदो स दव्वखंधो तु ।
णोआगमतो जाणयभव्वसरीरातिरित्तोऽयं ॥८९०॥

**खन्ध०** गाहा । आगमतो द्रव्यस्कन्धोऽध्येतानुपयुक्तः, नोआगमतो ज्ञशरीरादित्रिविधः ॥८९०॥

---

१ केइ को हे । २ काई को । केई हे त । ३ णो को । ४ तत्र च दिमभा°-इति प्रतौ ।
५ °त् । क्षयतद°-इति प्रतौ । ६ °वएसो को हे । ७ पज्जया को हे ।

[५९-प्र०][1]सच्चित्तो अच्चित्तो मीसो य समासतो जधासंखं ।
दुपदादि[2] दुपदेसादिओ य सेणातिदेसो[3] य ॥८९१॥

**सच्चित्तो** गाहा । तत्र ज्ञभव्यशरीरातिरिक्तस्त्रेधा सच्चित्तादिः । सच्चित्तो द्विपदादिः । [4]अचित्तो द्विप्रदेशादिः । मिश्रः सेनादिः । मिश्रसेनादिदेशः—हस्त्यश्व-रथपदातिमिति सेना, तस्या जीवाजीवात्मिकाया यदग्रानीकम्, सोऽग्रस्कन्धः, तथा मध्यमः पश्चिमश्चेति ॥८९१॥

अधवा कसिणोऽकसिणो अणेगदव्वो स एव विण्णेयो ।
देसावचितोवचितो अणेगदव्वो[6] विसेसोऽयं ॥८९२॥

**अधवा** गाहा । अथवा द्रव्यस्कन्धः कृत्स्नोऽकृत्स्नोऽनेकद्रव्यमिति । तत्र कृत्स्नः स एव द्विपदादिरक्षतः । अकृत्स्नः स एव द्विप्रदेशादिरवयवत्वात् देशा-पचितः । अनेकद्रव्यः, जीवाजीवात्मकत्वात् ॥८९२॥

आगमभावक्खंधो खंधपदत्थोवयोगपरिणामो ॥
णोआगमतो भावम्मि णाणकिरियागुणसमूहो ॥८९३॥

**आगम०** गाहा । आगमतो भावस्कन्धः सदर्थोपयोगपरिणामः, नोआग-मतस्तु ज्ञानक्रियागुणसमूहरूपः ॥८९३॥

सामाइयातियाणं छण्हज्झयणाण सो समावेसो ॥
णोआगमो त्ति भण्णइ णोसद्दो मीसभावम्मि ॥८९४॥

**सामा०** गाहा । सामायिकादीनां षण्णामध्ययनानां समावेशाद् ज्ञानदर्शन-क्रियोपयोगवतः नोआगमतो भावस्कन्धः, नोशब्दस्य मिश्रवचनत्वात्, पूर्ववत् ॥८९४॥

गणकायणिकाये[9] [10]य खंधे वग्गे तधेव रासी य ।
पुंजे पिण्डे णियरे संघाते आउल-समूहे[11] ॥८९५॥

**गण०** गाहा । उक्तः स्कन्धः ॥८९५॥ अधुना आवश्यकश्रुतस्कन्धानामेक-वाक्यता । तत्र सामायिकादिश्रुतविशेषाणां षण्णां स्कन्धः समूहः श्रुतस्कन्धः, आवश्यकं च तच्छ्रुतस्कन्धश्चेत्यावश्यकश्रुतस्कन्ध इति शास्त्राभिधानमुक्तम् ।

किं पुण छक्कज्झयणं जेण [12]छल्लत्थाधियारविणियुत्तं ।
सामाइयादियाणं[13] ते य इमे छ ज्जधासंखं ॥८९६॥

---

१ °सचित्तो अचि° हे । २ दुपयाई त हे । ३ °देसाइ को हे । ४ अच्चित्तो-इति प्रतौ । ५ ग्रानीकि सा-इति प्रतौ । ६ णाक° त । ७ °दव्वे त । ८ °हशयः-इति प्रतौ । ९ काए य नि° को । १० काए ख° को । ११ °हो त । १२ च्छ हे । १३ सामादिया° जे ।

**किं पुण०** गाहा । आह–किं पुनरिदं षडध्ययनमावश्यकम् ? उच्यते–षडर्थाधिकारविनियोगात् । ते चामी सामायिकादीनां यथासङ्ख्यमुच्यन्तेऽधिकाराः ॥८९६॥

**सावज्जजोगविरती उक्कित्तण गुणवतो य पडिवत्ती ।**
**खलितस्स णिंदणा वणतिगिच्छ गुणधारणा चेव ॥८९७॥**[1]

**सावज्ज०** गाहा । सावद्ययोगविरमणमर्थाधिकारः सामायिकस्य, गुणोत्कीर्त्तनमर्हतां चतुर्विंशतिस्तवस्य, गुणवतो गुरोः प्रतिपत्तिः पूजाविशेषो वन्दनाध्ययनस्य, व्रतशीलेषु स्खलितनिन्दनं प्रतिक्रमणस्य, चारित्रात्मनो व्रणचिकित्सा कायोत्सर्गस्य, अपराधक्षतसंरोहणमित्यर्थः, व्रतातिचारेतरोपचितकर्मविशरणार्थमनशनादिगुणधारणं प्रत्याख्यानस्यार्थाधिकार इति वर्त्तते । एषां च प्रत्यध्ययनमर्थाधिकारद्वार एवावकाशः प्रत्येतव्यः । इह तु स्कन्धोपदर्शनद्वारेणाभिधीयन्त इति ॥८९७॥

**दारक्कमागताणं वीसुं वीसुमिहमोहणिप्फण्णे ।**
**अज्झयणाणं णामं वक्खामो लाघवणिमित्तं ॥८९८॥**

**दार०** गाहा । यदुक्तमादौ श्रुतस्कन्धोऽध्ययनानि चावश्यकम् । तत्रावश्यकादिन्यासोऽभिहितः । अध्ययनन्यासावसरः । स चानुयोगद्वारक्रमायातः प्रत्यध्ययनमोघ एव वक्ष्यते लघ्वर्थः ॥८९८॥

**[५९–द्वि] आवस्सयस्स एसो पिण्डत्थो वण्णितो समासेणं ।**
**एत्तो एक्केक्कं[2] पि य अज्झयणं वण्णयिस्सामि ॥८९९॥**[3]

**आवस्स०** गाहा । पिण्डार्थः समुदायार्थः आवश्यकस्य श्रुतस्कन्ध इति शास्त्रस्यान्वर्थाभिधानात् समुदायार्थोऽयमुक्तः । अवयार्थोपदर्शनार्थमिदानीमेकैकमध्ययनं वक्ष्यामः ॥८९९॥

**तत्थज्झयणं सामाइयं ति समभावलक्खणं पढमं ।**
**जं सव्वगुणाधारो वोमं पिव सव्वदव्वाणं ॥९००॥**

**तत्थ०** गाहा । तत्र प्रथममध्ययनं सामायिकं समभावलक्षणम् । समभावलक्षणत्वाच्च सर्वगुणाधारः । यतो न समताशून्ये गुणावस्थानमस्ति ॥९००॥

**अधवा तब्भेत च्चिय सेसा जं दंसणादियं तिविधं ।**
**ण गुणो य णाणदंसणचरणब्भतिओ जतो अत्थि ॥९०१॥**

**अधवा** गाहा । अथवा चतुर्विंशतिस्तवादयस्तद्भेदा एवेति सामायिकमादावुच्यते, यतः सम्यग्दर्शनादित्रिविधं सामायिकमुक्तम् । न च सम्यग्दर्शनादिभ्योऽन्यद् गुणजातीयमस्ति ॥९०१॥

---

१ अनु० सू०५८ । २ °क्कं पुण अ° को हे त । ३ एषा गाथा अनुयोगद्वारीया सू० ५९ ।

**अणुयोगद्दाराइं महापुरस्सेव तस्स चत्तारि ।**
**अणुयोगो त्ति तदत्थो दाराइं तस्स तु मुहाइं ॥९०२॥**

**अणु०** गाहा । तस्य महापुरस्येव द्वाराण्यनुयोगद्वाराणि चत्वारि । अनुयोग इत्यध्ययनार्थः । द्वाराणि तत्प्रवेशमुखानि ॥९०२॥

**अकतद्दारमणगरं कतेगदारं पि दुक्खसंचारं ।**
**चतुमूलद्दारं पुण [1]सपदिद्दारं सुहाभिगमं ॥९०३॥**
**सामाइयमहपुरमवि[2] अकतद्दारं[3] तधेगदारं वा ।**
**दुरधिगमं चतुदारं [4]सपदिद्दारं सुहाभिगमं ॥९०४॥**

**अकत०** गाहा । **सामा०** गाहा । यथेह पुरमद्वारमधिगन्तुमशक्यम्, एकद्वारमपि च कृच्छ्रेणाधिगम्यते, कार्यातिपत्तये च भवति । चतुर्भिः पुनर्मूलद्वारैस्तत्प्रतिद्वारैश्चाऽक्लेशेनाधिगम्यते । न च कार्यातिपत्तयः । तद्वत् सामायिकमहापुरमप्यर्थाधिगमोपायद्वारशून्यमशक्यमधिगन्तुम्, कृतानुगमैकद्वारमपि च कृच्छ्रेण द्राघीयसा च कालेनाधिगम्येत, विहितसप्रच्छेद उपक्रमद्वारचतुष्टयं पुनरयत्नेनाल्पीयसा च कालेनाधिगम्यत इति द्वारोपन्यासः ॥९०३–९०४॥

**ताणीमाणि उवक्कमणिक्खेवाणुगमणयसणामाइं ।[5]**
**छ[6] त्ति[7] दु[8] [9]दु विकप्पाइं पभेततोऽणेगभेदाइं ॥९०५॥**

**ताणी०** गाहा । तानि चानुयोगद्वाराणीमानि, तद्यथा—उपक्रमो निक्षेपोऽनुगमो नय इति । तत्रोपक्रमः षड्विधः । निक्षेपस्त्रिविधः । द्विविधोऽनुग[मो न]यश्च । प्रभेदतश्चैषामनेकभेदता वक्ष्यमाणा ॥९०५॥

**सत्थस्सोवक्कमणं उवक्कमो तेण तम्मि व ततो वा ।**
**सत्थसमीवीकरणं आणयणं णासदेसंमि[10] ॥९०६॥**

**सत्थस्सो०** गाहा । तत्र शास्त्रस्योपक्रमणमुपक्रमः । उपक्रम्यतेऽनेनास्मिन् वेत्यादि । उप सामीप्ये क्रम पादविक्षेप इति शास्त्रसमीपकरणं शास्त्रस्य न्यासदेशानयनमित्यर्थः ॥९०६॥

**[६०–प्र०] णिक्खिप्पति तेण तहिं ततो [11]वें णिक्खेवणं व णिक्खेवो ।**
**णियतो व णिच्छितो वा खेवो णासो त्ति जं भणितं ॥९०७॥**

---

१ सपडि° को हे त । २ °यपुरमेव अ° जे । ३ °दार हे । ४ °पडि° को हे । ५ द्रष्टव्यमनुयोगद्वारे सू० ५९ । ६ अनु० सू० ७० । ७ अनु० सू० १५४ । ८ अनु० सू० १५५ । ९ अनु० सू० १५६ । अत्र सूत्रे नयस्य सप्तविधत्वमस्ति । आ० निर्युक्तावपि नयस्य सप्तविधत्वम् । १० °संति जे । ११ य त ।

**निक्खिप्प०** गाहा । तथा निक्षिप्यतेऽनेनेत्यादिको निक्षेपः, निक्षेपणं वा निक्षेपः, क्षिप प्रेरण इति नियतो निश्चितो वा क्षेपो निक्षेपो न्यासः स्थापनेति यावत् ॥९०७॥

**अणुगम्मति तेण तहिं ततो [1]व अणुगमणमेव वाऽणुगमो ।**
**अणुणो [2]अणुरूवो वा जं[3] सुत्तत्थाणमणुसरणं ॥९०८॥**

**अणु०** गाहा । अत्र गम्यतेऽनेनेत्यादिनानुगमनं चानुगमः । अणुनो वा सूत्रस्य गमोऽनु(णु ?)गमः, अनुरूपार्थगमनं वानुगमः सूत्रार्थानुसरणमित्यर्थः ॥९०८॥

**[4]स णयति तेण तहिं [5]ततोऽधवा वत्थुणो [6]यं जं णयणं ।**
**बहुधा पज्जायाणं संभवतो सो णयो णामं[7] ॥९०९॥**

**स ण०** गाहा । णीरु प्रापणे । तस्य(त्र) नय इति वक्तैव सूत्रार्थप्रापणव्यापारोपयोगान्नयतीति नयः । नीयते वानेनेत्यादिना, न[8]यनं वा नयः, वस्तुनः पर्यायाणां सम्भवतोऽधिग[9]मनमित्यर्थः ॥९०९॥

**दारक्कमोयमेव तु णिक्खिप्पति जेण णासमीवत्थं ।**
**अणुगम्मति णाणत्थं णाणुगमो णयमतं[10]विहीणो ॥९१०॥**

**दारक्क०** गाहा । एषां चोपक्रमादिद्वाराणामयमेव क्रम , यतो नानुपक्रान्तमसमीपीभूतं सत् निक्षिप्यते । न च [11]नामादिभिरनिक्षिप्तमर्थतोऽनु[12]गम्यते । न च नयमतविकलोऽनुगम इति ॥९१०॥

**संबंधोवक्कमतो समीवमाणीय [13]णत्थणिक्खेवं ।**
**सत्थं ततोऽणुगम्मति णएहि णाणा[14]विधाणेहिं ॥९११॥**

**संबंधो०** गाहा । यतस्तत्र शास्त्रं सम्बन्धात्मकेनोपक्रमेण स्थापनासमीपमानीय नामादिन्यस्तनिक्षेपमर्थतोऽनुगम्यते नानानयैः, अतोऽयमेवानुयोगद्वारक्रम इति ॥९११॥

**गुरुभावोवक्कमणं [15]को परिवाडी कतित्थमज्झयणं ।**
**भावम्मि कम्मि वट्टति किमितं दव्वं गुणो कम्मं ॥९१२॥**
**जीवगुणोऽजीवगुणो किण्णाणं दंसणं चरित्तं वा ।**
**पच्चक्खं अणुमाणं ओवम्ममधागमो वा त्ति ॥९१३॥**

---

१ य त । तओऽणु° को । तओ अणु° हे । २ °णोऽणुरूवओ वा को हे त । ३ तं जे । ४ स णेति त । ५ °हिं वा त° को हे । ६ व को हे त । ७ नाम को हे । ८ नयनां–इति प्रतौ ९ °गपन°–इति प्रतौ । १० °विहूणो को हे त । ११ नच नयादि–इति प्रतौ । १२ °तो न ग°–इति प्रतौ । १३ णत्थि त । १४ °णाभिधा° जे । १५ को त ।

[६०–द्वि] लोइयलोगुत्तरिओ किं सुतमत्थोऽधवोभयं होज्ज ।
अप्पयतो[2]ऽणंतरतो परंपरं वागमो[3] कस्स ॥९१४॥
किं दिट्ठिवादियं कालियं व किं वा सुतत्थपरिमाणं ।
ससमयपरसमयोभयसिद्धंताणं व को वच्चो ॥९१५॥
को व समएगदेसो समुदायत्थाधिगार इध णियतो ।
अज्झयणोवैक्कमणं कातव्वमिहेवमादीहिं ॥९१६॥

गुरु० गाहा [५] । उपक्रमसंक्षेपाधिकारोपदर्शनार्थमुच्यते । गुरोरभिप्रायोपक्रमणम्, का वाऽध्ययनपरिपाटी, कया च परिपाट्या कतिथमिदमध्ययनम्, औदयिकादीनां कस्मिन् वा भावे वर्त्तते, किं चेदं द्रव्यं गुण-क्रियाविशेषः, गुणत्वेऽपि च वक्ष्यमाणे किम् ? । जीवगुणोऽजीवगुण इति ? जीवगुणत्वेऽपि च ज्ञानादीनां कतमत् ? ज्ञानत्वेऽपि च किं प्रत्यक्षमनुमानमौपम्यमागमो वेति ? आगमत्वे च किं लौकिको लोकोत्तरः ? सूत्रमर्थोऽथवोभयागमः ? लोकोत्तरत्वेऽपि च किमात्मागमोऽनन्तरागमः परम्परागम इति ? किमिदमध्ययनं दृष्टिवादिकम्, अथ [कालिकम् ?] कालिकत्वेऽपि च किमस्य सूत्रार्थपरिमाणम् ? स्वसमयादीनां चेह को वाच्यः ? स्वसमयत्वेऽपि च कः समुदायार्थोऽधिक्रियत इत्यादिभिरुपक्रमणीयमध्ययनमित्युपक्रमविषयसंक्षेपार्थः ॥९१२–९१६॥

णामाती छब्भेतो उवक्कमो दव्वतो सचित्ताती ।
तिविधो [6]दुविधो य पुणो परिकम्मे वत्थुणासे य ॥९१७॥

**णामाती** [गाहा । इ]होपक्रमः षड्विधो नामादिः [अनु०सू०६०] । सर्वनिक्षेपेषु शास्त्रे सप्रभेदा नामादयो मङ्गलवदभिधेयाः । विशेषं वक्ष्यामः । द्रव्योपक्रमस्त्रिविधः सच्चित्तादिः [अनु०सू०६०] । एकैको द्विविधः परिकर्मणि वस्तुनाशे चेति [अनु० सू०६१] ॥९१७॥

परिकम्मं किरियाए वत्थूणं गुणविसेसपरिणामो ।
[7]तदभावे य विणासो दव्वादीणं जधाजोगं ॥९१८॥

**परि०** गाहा । तत्र परिकर्म वस्तुनो गुणविशेषपरिणामः क्रियया । तद्यथा पुंसो घृतरसायनाद्युपयोगाद्वर्णवय[:]स्थापनादिक्रिया कर्णस्कन्धवर्द्धनादयश्च क्रियन्ते । केचिच्छास्त्रशिल्पकलादिसम्पादनमपि द्रव्योपक्रमक्रियामाचक्षते । तच्च विज्ञानविशेषोपादानाद्भावोपक्रमो युक्तः । आत्मद्रव्यसंस्कारविवक्षातो वा द्रव्योपक्रमोऽपि स्याच्छरीरवर्णादिसंस्कारवत् । तदभावक्रिया विनाश[:] द्रव्योपक्रमः, वस्तूच्छेद एव वा । तथा तस्यैव

---

१ °रियं जे । २ अप्पणओ णं को । अप्पयओ अणं हे । ३ वागतो जे । ४ °णाव° जे । ५ °काराप° –इति प्रतौ । ६ तिविधो य पुणो दुविहो परि° को हे त । ७ तदभावो जे । ८ जुग्गं त । ९ क्रियाः त° –इति प्रतौ ।

पुंसः प्राणोच्छेदः । तथा शुकसारिकादीनां शिक्षागुणविशेषपरिणामस्तद्विघातश्च । चतुष्पदानां हस्त्यश्वादीनाम् । वृक्षादीनाम् वृक्षायुर्वेदोपदेशादनुग्रहोपघातक्रिया, अचित्तानां सुवर्णादीनां कुण्डलाङ्गुलीयकादिक्रिया, तद्विनाशश्च । मिश्राणामेषामेव द्विपदादीनां वस्त्रादिसमेतानामिति । सर्वत्र च द्रव्यस्य द्रव्येण द्रव्यैर्वोपक्रमो द्रव्योपक्रमः । द्वित्व-बहुत्वतश्च सम्भवतो विग्रहः कार्यः ॥९१८॥

**खेत्तमरूवं णिच्चं ण तस्स परिकम्मणा ण य विणासो ।**
**आधेयगतिवसेण तु करणविणासोवयारो त्थ ॥९१९॥**

**खेत्त०** गाहा । क्षेत्रमरूपं नित्यं चेत्यतस्तत्करणविनाशावशक्यौ, तदाधेयद्रव्यक्रियायास्तु तद्विनाशे च क्षेत्रोपक्रमोपचारः ॥९१९॥

**णावातिउवक्कमणं हलकुलितादीहि वा वि खेत्तस्स ।**
**सम्मज्जभूमिकम्मे पंथतलागादियाणं च ॥९२०॥**
**[६१-प्र०]जं वत्तणातिरूवो कालो दव्वाण चेय पज्जायो ।**
**तो तक्करणविणासे कीरति कालोवयारो ऽत्थ ॥९२१॥**

**णावाति०** गाहा [अनु०सू० ६७] । **जं वत्त०** गाहा । यतो वर्तनापरिणामक्रियादिरूपः द्रव्यपर्याय एव कालः, अतस्तत्करणविनाशयोरेव कालोपक्रमोपचारः ॥९२०–९२१॥

**छायाये णालियाए य परिकम्मं से जधत्थ विण्णाणं ।**
**रीक्खातीचारेहि य तस्स विणासो विवज्जासो ॥९२२॥**
**जं परहितयाकूतावधारणमुवक्कमो स भावस्स ।**
**तस्सापसत्थ मरुगिणिगणियाऽमच्चादयोऽभिहिता ॥९२३॥**

**छाया०** गाहा [अनु० सू० ६८] । **जं पर०** गाहा । यदिङ्गितादिना परस्याकूत चेतसोऽवधार्यते स भावोपक्रमः प्रशस्ताप्रशस्तभेदः [अनु० सू० ६९] । तत्र विषयादिहेतोरप्रशस्तः ब्राह्मणीदुहितु(तृ)देवदत्तामात्यवत् [अनु० सू० ६९] ॥९२२–९२३॥

**सीसो गुरुणो भावं जमुवक्कमते सुभं पसत्थमणो ।**
**सहितत्थं स पसत्थो इह भावोवक्कमोधिकतो ॥९२४॥**

**सीसो** गाहा । इह यच्छिष्यः श्रुतादिहेतोराचार्याभिप्रायमुन्नयति, स प्रशस्तः [अनु० सू० ६९] ॥९२४॥

---

१ वृक्षपूर्वे-इति प्रतौ । २ अचित्ता इति प्रतौ । ३ °ण,मैषा- इति प्रतौ । ४ °गयव° हे को । ५ णावाए को हे । ६ पज्जाया जे । ७ °रो तु जे । ८ रिक्खा° को हे । ९ °क्कमा जे । १० तस्सासुभस्स को हे त । ११ °रथश° इति प्रतौ । १२ सुयं हे । १३ °मो गहिओ त ।

को वक्खाणावसरे गुरुचित्तोवक्कमाधिकारोऽयं ।
भण्णति वक्खाणंगं गुरुचित्तोवक्कमो पढमो[1] ॥९२५॥

**को वक्खा०** गाहा । आह–व्याख्यावसरे किमिह गुरुचित्तोपक्रमणम् ? उच्यते–तदङ्गत्वात्, तदधीनत्वाच्च सर्वव्याख्याङ्गानामिति ॥९२५॥

गुरुचित्तायत्ताइं[2] वक्खाणंगाइं जेण सव्वाइं ।
तो जेण सुप्पसण्णं[3] होति तयं तं तधा कज्जं ॥९२६॥

**गुरु०** गाहा । यतो हि गुरुचित्तायत्तान्युपक्रमादिव्याख्याङ्गानि, अतस्तदुपक्रम्य येन यथा च सुप्रसन्नं भवति तत्तथापादनीयम् ॥९२६॥

जो जेण पगारेणं तुस्सति करणविणयाणुवत्तीहि[4] ।
आराधणाएं मग्गो सो च्चिय अव्वाहतो तस्स ॥९२७॥

[६१–द्वि०] आगारिंगितकुसलं जति सेतं वायसं वए पुंज्जो[6] ।
तध वि य सिण्ण विकूडे विरहम्मि य कारणं पुच्छे ॥९२८॥

णिवपुच्छितेण[7] गुरुणा भणितो गंगा कतोम्मुही वहति ।
संपातितवं सीसो जध तध सव्वत्थ कातव्वं ॥९२९॥

जुत्तं गुरुमतगहणं को सेसोवक्कमोवयोगोऽत्थ ।
गुरुचित्तपसातत्थं ते वि जधाजोग्गमायोज्जा ॥९३०॥

**जो जेण०** गाहा । **आगारिं०** गाहा । **णिव०** गाहा । **जुत्तं** गाहा । आह–गुरुभावोपक्रम एव युक्तोऽभिधातुं सप्रयोजनत्वान्न शेषा, निरुपयोगित्वात् । उच्यते–तेऽपि हि गुरुचित्तप्रसादार्थमेवायोजनीया यथासम्भवम् ॥९२७–९३०॥

परिकम्मणामणाओ देसे काले य जा जधा जोग्गा[8] ।
ताओ दव्वातीणं कज्जाऽऽहारादिकज्जेसु ॥९३१॥

उवहितजोग्गदव्वो[10] देसे काले परेण विणएणं ।
चित्तण्णू अणुकूलो सीसो सम्मं सुतं लभति ॥९३२॥

**परि०** गाहा । **उवहि०** गाहा । एवं विधिवदुपनीताऽऽसनाऽऽहारादियोग्यद्रव्यशिष्यो देशे काले च विनीतात्मा चित्तज्ञानुकूलः सम्यगभिप्रेतमर्थं लभत इति द्रव्योपक्रमादयोऽपि व्याख्याङ्गमेवेति ॥९३१–९३२॥

---

१ पढमं को हे त । २ °त्तामत्ता° त । ३ °सण्णं त । ४ णुवि° त । ५ °णाइ त । ६ पुज्जा त हे । बुज्जा को । ७ °तेण भणितो गुरुणा जे । ८ °जोग्ग° त । ९ °प्रदेशार्थं°–इति प्रतौ । १० जो त । ११ जोग्गो त । १२ °दव्वो हे ।

**अधवोवक्कमसामण्णतो मता पयतणिरुवयोगा वि ।**
**अण्णत्थ सोवयोगा एवं चिय सव्वणिक्खेवा ॥९३३॥**

**अह०** गाहा । अथवेहोपक्रमसामान्येनापदिश्यन्तेऽधिकृतनिरुपयोगा अपि सन्तोऽन्यत्रोपयोगिन इति तद्वच्छास्त्रे समस्ते चानुयोगे सर्वनिक्षेपविशेषाः ॥९३३॥

**गुरुभावोवक्कमणं कतमज्झयणस्स छव्विधमिदाणिं ।**
**तत्थऽणुपुव्वादीसुं इदमज्झयणं समोतारे ॥९३४॥**

**गुरु०** गाहा । गुरुभावोपक्रमणमुक्तम् । अध्ययनमिदानीमुच्यते । तत्रानुपूर्व्यादिरुपक्रमः षड्विधः । तद्यथा-- आनुपूर्वी नाम प्रमाणं वक्तव्यता अर्थाधिकारः समवतार इति [अनु०सू०७०]। तत्रेदमध्ययनमानुपूर्व्यादिषु समवतारणीयं सम्भवतः ॥९३४॥

**अणुपुव्विसमोता[६२-प्र०]रो कज्जो सामाइयस्स संभवतो ।**
**णियमावतारणं पुण कित्तणगणणाणुपुव्वीसु ॥९३५॥**

**अणु०** गाहा । तत्रानुपूर्वी नामादिभेदाद्दशधा [अनु०सू०७२] । तत्रावतारः सम्भवतः कार्यो विशेषेण तूत्कीर्तनगणनानुपूर्व्यो । उत्कीर्त्तनं सामायिकं चतुर्विंशतिस्तव इत्यादि । गणनं परिसंख्यानमेकं द्वि त्रीणीत्यादि ॥९३५॥

**पुव्वाणुपुव्वितो तं पढमं पच्छाणुपुव्वितो छट्ठं ।**
**जायति गणिज्जमाणं अणियमितमणाणुपुव्वीयं ॥९३६॥**

**पुव्वा०** गाहा । तत्र सामायिकं पूर्वानुपूर्व्या प्रथमम्, पश्चानुपूर्व्या षष्ठम्, अनानुपूर्व्या गण्यमानमनियतं क्वचित् प्रथमं क्वचिद् द्वितीयमित्यादि ॥९३६॥

**एकादेगुत्तरिया छग्गच्छगता परोप्परब्भत्था ।**
**पुरिमंतिमदुगहीणा परिमाणमणाणुपुव्वीणं ॥९३७॥**

**एगा०** गाहा । अनानुपूर्वीणामिदं करणम्- एकाद्येकोत्तरिका[?] षड्गच्छगताः । १२३४५६ परस्परतोऽभ्यस्यन्ते ७२० ततः प्राक्पश्चानुपूर्वीरूपद्वयमपनीयानानुपूर्व्यो भवन्ति-७१८ ॥९३७॥

**पुव्वाणुपुव्विहेट्ठा समयाभेतेण कुण जधाजेट्ठं ।**
**उवरिमतुल्लं[4] परतो णसेज्ज पुव्वक्कमो सेसे ॥९३८॥**

**पुव्वा०** गाहा । पूर्वानुपूर्वामुपन्यस्य -सा च व नि का प्र--तदधस्तात् प्रस्तारसमयमभिन्दन् यथा ज्येष्ठमेवापन्यस्येत । तत्र सामायिकस्य ज्येष्ठं नास्येवेत्यतश्चतुर्विंशतिस्तवज्येष्ठं सामायिकम् । तत्तस्यैवाधः स्थापयेत् । उपरिमतुल्यं परत इति

---

१ °योग्गावि जे । २ °व्वीए त को हे । ३ °तरया को हे त । अत्र अनु० सू० ९७ द्रष्टव्यम् । ४ पुरतो को हे त । ५ °वावस्था°-इति प्रतौ ।

परतो यदुपरि लक्ष्यते तदेवाधः स्थापयेत्–

सा च व नि का प्र

सा व नि का प्र

'पूर्वक्रमः शेषः' इति न्यस्तादन्यस्तं शेषम् । तच्चेह चतुर्विंशतिस्तवस्तस्य पूर्वक्रमः कार्यः । तत्रैकस्य क्रमाभावात् सामायिकोऽध एव दीयते --

सा च व नि का प्र

च सा व नि का प्र ॥छ॥

तृतीयपरिपाटीमप्यधः प्रस्तारसमयाभेदेन यथा ज्येष्ठमेव स्थापयेत् तत्र चतुर्विंशतिस्तवज्येष्ठं सामायिकं तत्रादौ प्राप्ते प्रस्तारसमयभेदो मा भूदित्यतिक्रामयेत् । कथं च प्रस्तारसमयभेदः स्यात् ? यदि सामायिकमादौ दीयते उपरिमतुल्यप्रस्तारात् परतो भूय सामायिकं प्रसज्येत चतुर्विंशतिस्तवनाशश्च स्यात् । तस्माच्चतुर्विंशतिस्तवाधोऽतिक्रम्य सामायिकमधः प्राप्तं तस्य ज्येष्ठमेव नास्तीति वन्दनाध[:] स्तवं स्थापयेत्—

च सा व नि का प्र

० ० च ० ० ०

उपरिमप्रस्तारतुल्यत्वात् परतो निन्दादयः । पूर्वक्रम शेष इति शेषं सामायिकं वन्दनम् । च । तत्र पूर्वक्रमोऽयमेष प्राक् सामायिकं ततो वन्दनमेवमापरिसमाप्तेः प्रस्तारः कार्य इति

सा च व नि का प्र

च सा व नि का प्र

सा व च नि का प्र ॥९३८॥

**जं वत्थुणोभिहाणं पज्जयभेयाणुसारि तं नामं ।**

**पइभेयं जं नमए पइभेयं जाइ जं भणियं ॥९३९॥**

**जं वत्थु०** गाहा । इह यद्वस्तुनो [1]नाम अभिधानं ज्ञानरूपादिपर्यायप्रभेदानुसरणस्वभावं तन्नाम, णम प्रह्वत्वे इति प्रतिवस्तु नमनात् प्रतिवस्तु प्रह्वीभवनादित्यर्थः । तच्च दशप्रभेदम्--एकनामादिबहुभेदं [अनु०सू० १२१] चाभिलाप्यविषयत्वात् ॥९३९॥

**छव्विह नाम भावे खओवसमिए सुयं समोयरइ ।**

**जं सुयनाणावरणखओवसमजं तयं सव्वं ॥९४०॥**

**छव्विह** गाहा । ततः षड्विधे नाम्नि भावः षड्विधो वर्ण्यते [अनु०सू० १२७] तत्र क्षायोपशमिक एव सर्वश्रुतावतारो नान्यत्र, श्रुतज्ञानावरणक्षयोपशमजत्वाच्छ्रुतस्य ॥९४०॥

---

१ [1]काद्यावेव-इति प्रतौ ।

